काले। प्रवाह्कं गृह्णीयात्[१] ॥ ऊर्ध्वार्थे प्रवाह्कः प्रधाह्क् चेति कैश्चि-त्पठ्यते[२] ॥ * ॥ ज्योगिति कालभूयस्त्वे[३]। ज्योग् जीवामः। ज्योक्कृत्य नृपतिं गतः[४] ॥ शीघ्रार्थे संप्रत्यर्थेऽपि ॥ * ॥ तिरः। इत्यन्तर्धानतिर्यगर्थयोः। विश्वयोनिस्तिरो दधे[५]। तिरः काष्ठं[६] करोति ॥ अवज्ञायामपि। यथा।

तिरश्चकार भ्रमराभिलीनयोः
सुजातयोः पङ्कजकोशयोः श्रियम्[७] ॥ * ॥

मुहुः। इति पौनःपुन्ये। इह मुहुर्मुदितैः कलभैरवः[८] ॥ मुहुर्मुहुर्मुह्यति या मृगाक्षी। इत्यादिलक्ष्यदर्शनान्मुहुर्मुहुरित्यपि[९] ॥ * ॥ शुनु। इति पूजायाम्। शुनु नासीरमस्येति शुनासीरः[१०] ॥ शुनु अश्नुते। श्वशुरः[११] ॥ क्षिप्रार्थेऽपि। शुनु क्षिप्रं नयत्यन्तरिक्ष इति वा। शुनो वायुः[१२] ॥ * ॥ युक्तमिति न्याय्ये। यथा वीराचार्याणाम्।

युक्तं सिताम्बराणां तुम्बग्रहणं कुटुम्बपरिहरणम्।
कथमन्यथा तरीतुं शक्यः संसारतोयनिधिः[१३] ॥ * ॥

सभ्रानिति समानार्थे। सभ्रान्देवदत्तो यज्ञदत्तेन ॥ * ॥ आर्यहलमिति बलात्कारे। आर्यहलं गृह्णाति[१४] ॥ आर्येति प्रीतिबन्धे। हलमिति च

---

१ श्नीयात् C
२ Thus A, ऊर्ध्वार्थे प्रवाहकेति कैश्चित्° F (always श), प्रवाहप्रवाहकेति° B, अर्थार्थे प्रवाहकवेत्युच्यते C. ‡ प्रवाहत्केति D
३ कालभूयस्त्वामन्त्रयोः A; कालभूयस्त्वमन्त्रयोः F
[४] B C. D om this example.
५ Kum. S 2, 62
६ कोष्ठं C.; om D
७ भ्रमरावलीढयो° F., D omits this example; Ragh 3, 8
८ Sisup 4, 60
९ D om from मुहुर्मुहुर्मुह्यति.
१० शुनासीरमस्येति शुनासीर° B C.
११ श्वसुरः A. C.
१२ °अन्तरिक्षमिति° A; शुनो वायुः A. B; D om from क्षिप्रार्थे. Nir 9, 40.
१३ संसारतोयधिः F.
१४ गृह्णामि B C. F.

सर्वार्थे। समस्मिन्। सिमस्मिन्॥ सिम शक्त। सित[1]। अवबद्ध इत्यर्थ इत्येके। सिम इति मर्यादायामित्यपरे॥ * ॥ त्वान्यतरशब्दावन्यार्थे। त्वस्मै। अन्यतरस्मै। अस्य तस्मादेव गणपाठात्सिद्धिः॥ शाकटायनस्तु यत्तत्किमन्याद् द्वयोर्निर्धार्ये डतर[2]। वैकाद्बहूना प्रश्ने डतमश्चेति सूत्राभ्या डतरडतमौ। अन्यतरान्यतमौ[3] सिद्धौ। ततोऽन्यतरशब्दस्य डतरान्तदारेणैव ग्रहणे सिद्धेऽन्यतरग्रहणमन्यतमव्यवच्छेदार्थमित्याह॥ * ॥ इतरेतरेति क्रियाविनिमये। इतरेतरस्मै॥ २१॥

एकेदमदसो ज्ञेया डतरो डतमस्तथा।
स्वमज्ञातिधनेऽनाम्नि कालदिग्देशवृत्तय॰ ॥ २२॥
[पूर्वापरावरपरा उत्तरो दक्षिणाधरौ[4]।]

एकेति सख्यासहाययो। एति गच्छति गणनामित्येक[5]। एति गच्छत्यद्वितीय इति वा[6]। एकस्मिन्॥ * ॥ इदमिति प्रत्यक्षे। अस्मिन्॥ * ॥ अदस्। इत्यप्रत्यक्षे[7]। अमुष्मिन्॥ * ॥ डतरडतमौ प्रत्ययौ। तदन्त सर्वादिर्भवति। यतरस्मिन्। यतमस्मिन्। ततरस्मिन्। ततमस्मिन्। कतरस्मिन्। कतमस्मिन्। एकतरस्मिन्। एकतमस्मिन्॥ * ॥ स्वमज्ञातिधन इति स्वशब्दोऽर्थचतुष्टयवृत्तिरात्मात्मीय ज्ञातिधनयोश्च रूढित। अस्य वृत्ति। यथा हरिशब्दस्य तुरङ्गवानरदर्दुरादिषु।

---

१ ? शक्त स्मित A शक्त सित F शक्ति स्मित H शक्ते। C D corr °शक्त। सिम अव° ? सिम = 1 शक्त 2 सित i e अवबद्ध Sâyana records the meanings सर्व सम्जन श्रेष्ठ शत्रु णां बन्धक cf also Mah dh V S 23 37

२ यत्किम° D °किमन्याद्द्वयो नि र्धार्ये° A D cf Pân v 3 92 94

३ A om अन्यतरान्यतमौ

४ Conjectured to complete metre परावराधरा पूर्वदक्षिणावुत्ततापरौ। B C F पूर्वापरावरधरदक्षिणोत्तर इत्यमी। व्यवस्थायामसज्ञाया ज्ञेया पूर्वादिकार्येण॥ D om A E

५ एति येननास्तिकालादि गच्छति। गणनामित्येक D om A

६ एको गच्छति अद्वितीय॰ F om A

७ इति प्रत्यक्षे B C F H om from अदस् to यतरस्मिन्

त्वचनो[१]ऽयम् ॥ * ॥ विश्वस्मिन् ॥ * ॥ उभयस्मिन् ॥ * ॥ नेम इति सर्वार्धार्थयोः[२]। नेमस्मिन् ॥ * ॥ यदिति निर्देशे । यस्मिन् । यतते प्रयत्नं करोति । तेनार्थमुद्देष्टुमिति व्युत्पत्त्या उद्देशेऽपि ॥ * ॥ तदिति परोक्षे । तस्मिन् । तनोति विस्तृणाति[३] प्रतिनिर्देशमिति[४] व्युत्पत्त्या निर्देशेऽपि वर्तते ॥ * ॥ किमिति प्रश्नक्षेपयोः[५] । पृच्छ्यते[६] क्षिप्यतेऽनेनेति किं प्रश्नवाची ॥ कस्मिन् ॥ * ॥ युष्मदिति प्रत्यक्षे । युष्यते सेव्यत उपचारवतीभिर्वाग्भिरिति । त्वकम् ॥ * ॥ अस्यते क्षिप्यते सत्कार इति । अहकम्[७] ॥ परात्मवाचिनौ युष्मदस्मच्छब्दौ ॥ * ॥ द्वकौ[८] ॥ * ॥ भवत्शब्दः[९] परोक्षे । भवकत्[१०] । उदिच्च[११] छन्दोभङ्गभयान्नोपात्तः[१२] ॥ * ॥ त्यस्मिन् ॥ * ॥ एतदिति प्रत्यक्षे । एतस्मिन् । एजति[१३] कंपतेऽनेन वचसा सामीप्यवाचिना सत्वमिति व्युत्पत्त्या सामीप्ये ऽपि[१४] ॥ * ॥ उभौ । उभाभ्यां हेतुभ्याम् । उभयोर्हेत्वोः । अस्य पाठ. सर्वादेरित्यनेन[१५] सर्वविभक्त्यर्थः ॥ * ॥ त्वदिति समुच्चयवाचकः । त्वकत्[१६] ॥ * ॥ अन्योन्यपरस्परशब्दौ क्रियाविनिमये । अन्योन्यस्मै । परस्परस्मै ॥ * ॥ इतरेति पृथगर्थे । इतरस्मिन् ॥ * ॥ समसिमशब्दौ

---

१ अन्यत । पृथक्त्ववचनो B C F

२ सर्वार्थयो A., सर्वाद्यीर्मयो । D, सर्वार्धार्थे C

३ चीणाति । D

४ निर्देशमि C

५ प्रश्नाक्षेपयो A

६ काम्यते पृच्छ्यते F, A om from पृच्छ्यते to प्रश्नवाची

७ A has only कस्मिन् । त्वकं । अहकं ।

८ द्विकौ D

९ भवच्छब्द् A D

१० भवत B, भवत C., भवत्कम् D

११ उदित्तु B C F

१२ °न पठिता A, न छत । D

१३ एजते F

१४ A om from एजति

१५ सर्वादेरपित्य° D a m, सर्वादेरदित्य° F, C om from वचसा सा°

१६ त्वति व्युत्पत्त्यासामीप्यवत् D

शमस्य शमाः । अत इञः ॥ * ॥ भण्डितस्य भण्डिताः । अश्वादिष्फस्य[१] ॥ * ॥ पदं वेत्त्यधीते वा । पदकः । तस्य पदकाः ॥ * ॥ कपतीत्यौणादिके[२]ऽके । कपकः । तस्य कपकाः ॥ कडम इति भोजः ॥ * ॥ हारः कम्बलादिति[३] कम्बलपूर्वो हारशब्दो ज्ञेयः ॥ कम्बलं हरतीति[४] कम्बलहारः । तस्य कम्बलहाराः[५] ॥ * ॥ स्वगतीति स्वगेरौणादिकेऽलप्रत्यये । स्वगलः । तस्य स्वगलाः[६] ॥ एभ्योऽत इञः ॥ * ॥ एवं पुष्करसच्छब्दस्य यस्कादीञः[७] षुग् द्रष्टव्यः ॥ अन्ये तु भृगुकुत्सवशिष्ठगोतमाङ्गिरोऽचेरिति[८] सूत्रं पृथग्विदुः । तेषां मते यस्कादित्वाद्[९] यस्कादेर्गोत्रेषु पष्ठ्यास्तत्पुरुष[१०] इत्यनेन भृगुकुलं भार्गवकुलमित्यादि सिध्यति ॥ २७ ॥ इति यस्कादिः ॥

उपकलमकौ पिष्टोदङ्कौ कुपीतककर्णकौ
कमककालशीकण्ठौ[११] कृष्णाजिनानुपदौ तथा ।
बधिरकेसरीजङ्घावेतौ वटारकपर्णकौ
गडुकजतुकौ लेखाभ्रूश्च प्रतानपतञ्जलौ ॥ २८ ॥

उपकादयः शब्दा[१२] वोपकादेरित्यनेन सूत्रेणापत्यप्रत्ययलुग्भाजो[१३] वा भवन्ति ॥ उपकस्यापत्यानि । उपकाः । औपकायनाः[१४] ॥ * ॥

---

१ See Note ४, page ५५
२ कपयतीति° A
३ हारशब्दा° C
४ F om from कम्बलं
५ कंबलाहारः C.
६ स्वागलाः C.
७ यस्कादिपाठात् षुग् C.
८ °गोतमांगिरौतिरिति A. ; °व शिष्ठांगिरोगोतमेभ्य इति D ; cf P. II. 4, 63, Kât. II 4, 7.
९ यस्कादित्वात् A B F ; यास्कादित्वात् C.
१० Cf Pāṇ II 4, 64 Vârtt , D om. from तेषां मते to end.
११ कमककाल° B C.
१२ शब्दाद्योप° C., शब्दा भवदकपर्यंता D ; शब्दा. षर्वधकपर्यंता F
१३ °प्रत्ययाय लुग्भाजो C.
१४ उपकायना° C

वहिर्योगो यस्य स वहिर्योगः । तस्य वहिर्योगाः ॥ अन्ये तु । अहिना योगो यस्येति । अहिर्योगः । गणपाठाद्रेफ इत्याहुः ॥ * ॥ अजवस्तयः[१] । गृष्ट्यादिढञः[२] ॥ * ॥ तृणकर्णाः । शिवाद्यण् ॥ * ॥ वर्म्मका:[३] ॥ पटाकाः ॥ वकसक्थाः[४] ॥ एभ्योऽत इञः[५] ॥ * ॥ गोतमस्य गोतमाः[६] ॥ ऋष्यण् ॥ * ॥ क्रोष्टारं मिमीते[७] । क्रोष्टोरिव मायाऽस्येति वा । क्रोष्टुमायः । तस्य क्रोष्टुमायाः ॥ * ॥ कटु[८] मन्यतीति कटुमन्यः । तस्य कटुमन्याः ॥ अपरे कटुकमन्य इत्याहुः । अन्यस्तु[९] कटुक मन्यकेति पृथक् शब्दद्वयमिदमित्याह ॥ आभ्यामत इञः ॥ * ॥ मित्रयोर्मित्रयवः[१०] ॥ औत्सर्गिकस्याण् ॥ २६ ॥

क्रोष्टुपादसदामत्तायःस्थूणकृशभण्डिताः ।
पदकः[११] कपको हारः कम्बलात् स्यगलस्तथा[१२] ॥ २७ ॥

क्रोष्टोरिव पादौ यस्य स क्रोष्टुपादः । पाठसामर्थ्यात् पादस्य समासान्ते[१३] लुप्न भवति । क्रोष्टून्पादयति निष्कासयतीति[१४] वा । क्रोष्टुपादः । तस्य क्रोष्टुपादाः ॥ क्रोष्टुमानमिव[१५] मानं यस्य स क्रोष्टुमान इति केचित् ॥ * ॥ सदामत्तस्य सदामत्ताः ॥ आभ्यामत इञः ॥ * ॥ अयोमयी स्थूणा यस्य सोऽयःस्थूणः । तस्यायःस्थूणाः ॥ शिवाद्यण् ॥ * ॥

---

१ अजवस्तय A D, अजवस्त त स्थाजवस्ता C, D om to वकसक्था
२ °ढण MSS, cf p 226.
३ वर्म्मीका. B
४ वकसकथा. A
५ इञ् C ; B C add शब्दा एते
६ गोतमस्य गोतमा A
७ क्रोष्टुं मिमीते D F ; क्रोष्टुवत् मिमीते शब्दायतो । A
८ कटुं I
९ अपरे कटुमथक इत्याहु. । भोजस्तु D
१० B om मित्रयोर्
११ पादक F
१२ कम्बलास्य° B, हारकंबलास्यगम° C ; स्वगिम° F
१३ समासान्तो A B C D
१४ नि ष्कासयतीति A ; निष्काश°D
१५ क्रोष्टुर्मान° D F

छगस्य छगाः । अत इञः ॥ * ॥ भण्डितस्य भण्डिताः । अश्वादिफस्य[१] ॥ * ॥ पदं वेत्त्यधीते वा । पदकः । तस्य पदकाः ॥ * ॥ कपतीत्यौणादिके[२]ऽके । कपकः । तस्य कपकाः ॥ कडम इति भोजः ॥ * ॥ हारः कम्बलादिति[३] कम्बलपूर्वो हारशब्दो ज्ञेयः ॥ कम्बलं हरतीति[४] कम्बलहारः । तस्य कम्बलहाराः[५] ॥ * ॥ खगतीति खगेरौणादिकेऽलप्रत्यये । खगलः । तस्य खगलाः[६] ॥ एभ्योऽत इञः ॥ * ॥ एवं पुष्करसच्छब्दस्य बाह्वादीञः[७] लुग् द्रष्टव्यः ॥ अन्ये तु भृगुकुत्सवशिष्ठगोतमाङ्गिरोऽत्रेरिति[८] सूत्रं पृथग्विदुः । तेषां मते यञादित्वाद्[९] यञादेर्द्वेकेषु षष्ठ्यास्तत्पुरुष[१०] इत्यनेन भृगुकुल भार्गवकुलमित्यादि सिध्यति ॥ २७ ॥ इति यस्कादिः ॥

उपकलमकौ पिष्टोदङ्कौ कुषीतककर्णकौ
कमककलशीकण्ठौ[११] कृष्णाजिनानुपदौ तथा ।
बधिरकखरीजङ्घावेतौ वटारकपर्णकौ
गडुकजतुकौ लेखाभ्रूश्च प्रतानपतञ्जलौ ॥ २८ ॥

उपकादयः शब्दा[१२] वोपकादेरित्यनेन सूत्रेणापत्यप्रत्ययलुग्भाजो[१३] वा भवन्ति ॥ उपकस्यापत्यानि । उपकाः । औपकायनाः[१४] ॥ * ॥

---

१ See Note ५, page ५५
२ कथयतीति॰ A
३ हारकवला॰ C
४ F om from कम्बल
५ कंवलाहार॰ C
६ खागला C
७ बह्वादिपाठात् लुग C
८ ॰गोतमागिरोत्रिरिति A, ॰वशिष्ठांगिरोगोतमेभ्य इति D, cf P ii 4, 65, Kāt. ii 4, 7
९ यञादित्वात् A B F, याञादित्वात् C
१० Cf Pān ii 4, 64 Vārtt, B om from तेषां मते to end
११ कमकाकल॰ B C
१२ शब्दाद्योप॰ C; शब्दा भवन्ध्येकपर्यंता D, शब्दा अवधकपर्यंता F
१३ ॰प्रत्ययाद्य लुग्भाजो C
१४ उपकायना C

**दशेरकाग्निवेशेभ्यो गडेरकदशेरकाः ।**
**कृष्णेभ्यः सुन्दराः प्रोक्ताः ककुभश्च[1] पृथोर्जकात् ॥ ३४ ॥**

दंशनशीलो दशेरः । सर्पः सारमेयश्च । स्वार्थे के सति तस्यापत्यानि । गडति सिञ्चति पर्वताद्भूमिमिति गडेरो निर्झरः[2] । तद्योगात्पुरुषो गडेरः । तस्यापत्यानि । दाशेरकयश्च गाडेरकयश्च[3] । दशेरकगडेरकाः । अत इञः ॥ * ॥ अग्निवेशस्य दाशेरकयश्च[4] । अग्निवेशदशेरकाः[5] । यञः पूर्वेणैव लुक् सिद्धः ॥ परपदस्थदाशेरकिशब्दोपसंग्रहार्थं लिङ्गोपादानम्[6] ॥ * ॥ कार्ष्णयश्च सौन्दरयश्च । कृष्णसुन्दराः । अत इञः ॥ * ॥ पार्थोर्जकयश्च काकुभयश्च । पृथोर्जककुभाः । अत इञः ॥ ककुभशब्दस्य[7] शिवादौ पाठः प्रायिकः ॥ पृथां पृथिवीमूर्जयति वर्धयति । पृथोर्जकः । पृथगूर्जक इति वा[8] गणनिपातनात् कलोपः ॥

उपकलमकभ्रष्टककपिष्ठलकृष्णाजिनकृष्णसुन्दराणां नित्यार्थः पाठः । अन्येषां तु द्वन्द्वेऽपि पूर्वेण[9] विकल्पः । तेन पिङ्गलकृष्णपिङ्गलाः । पैङ्गलककार्ष्णपिङ्गलयः[10] ॥ ३४ ॥ इति तिककितवादिः ॥

**ज्ञेयो गोपवनो विन्दुः शिग्रुश्यामाकभाजनाः[11] ।**
**श्यामकाश्वावतानौ च शयापर्णः सप्तकस्तथा[12] ॥ ३५ ॥**

---

१ सुंदरीः॰ C ; ककुभाय B. C.
२ निर्झरस् B ; तस्यापत्यानि गडेति सिचति॰ गडेरो निपूभरस् C.
३ दाशेरकयश्च गडेरकयश्च B C.; गाडेरकाय F.
४ दासेरकय च॰ B.
५ अग्निवेशदाशेरकाः A.; अत इञ्। अग्निवेश्या दासेरकाः। C.; [अग्निवेश
६ ॰दाशेरकशब्दो॰ C.; ॰लिङ्गोपादानं B ; D. see next note.
७ D. om. from शब्दोपसंग्रहार्थं to ककुभ.
८ A. om. पृथगूर्जक and वा.
९ पूर्वेणैव F.
१० पिंगलिक॰ A. D ; [पिंगलक॰ कार्ष्णपिंगलयः F.
११ श्यामक॰

यञञोश्चेत्यनेन[१] लुक् प्राप्ता न गोपवनादिभ्य[२] इत्यनेन निषिध्यते ॥ गोपवनस्यापत्यानि । गोपवनाः ॥ * ॥ बैन्दवाः ॥ * ॥ शिग्रुरिव[३] शिग्रुर्निःसारः कश्चित् । तस्य शैग्रवाः[४] ॥ * ॥ श्यामा लताः कायति[५] । श्यामाकः । तस्य श्यामाकाः[६] ॥ * ॥ भाजयतीति भाजनः । तस्य भाजनाः ॥ * ॥ श्यामं करोतीति श्यामकः । तस्य श्यामकाः ॥ श्यावक इत्यन्ये ॥ * ॥ श्यामवतनोति । श्यावतानः । तस्य । श्यावतानाः ॥ * ॥ श्यामानि पर्णान्यस्य । श्यापर्णः[७] । अत एव निपातनान्मलोपः[८] ॥ * ॥ सम्यकस्य साम्यकाः । श्यवक इत्यन्ये[९] ॥ * ॥ बिन्दुभाजनस्तृपणावन्ये पठन्ति ॥ वामनमते शिग्रुः प्रत्याहारः[१०] ॥ ३५ ॥ इति गोपवनादिः ॥

क्रौडिव्याड्यापिशलिसौधातकिदेवदत्तिचैकयताः[११] ।
कापिष्ठलिचैटयतावापिशलिलौडिचौपयतौ[१२] ॥ ३६ ॥

क्रौड्यादीनामित्यनेनैषां पौत्रादौ स्त्रीलिङ्गेऽपत्येऽणिञोर्घ्यो भवति[१३] ॥ क्रौडि । क्रीडतीति । अचि बाहुलकाद्दोले । क्रोडः । तस्यापत्यं स्त्री । क्रौड्या ॥ * ॥ व्याडि[१४] । विविधमडतीति व्यडः । तस्यापत्यं स्त्री ।

---

१ यञिञोश्चेत्यनेन F , Pân ii 4, 64
२ Pân ii 4, 67
३ शिग्रुरिति A
४ सैग्रवा॰ B C
५ श्यामलता. कायति A , श्यामा लताकाह्वति । F
६ श्यामकस्तस्य श्यामका. A
७ श्यामपर्ण. । A F
८ निकतमान्मलोप. A
९ श्यमकस्य श्यामका॰ । संवक [संयक F ] इत्यन्ये । B C F.
१० ? Thus F , सिग्रु॰प्रत्याहार. B C , शिग्रुप्रत्याहार॰ A D
११ क्रौडि॰ चैकयति C , ॰सौधाति-कि॰ A
१२ ॰चैटयेतावापि॰ C , ॰चौपयतौ । A C D
१३ णिञोर्ञ्यो भवति A , णिञो-र्घ्योर्भवति C , B om from क्रौड्यादी-नाम्
१४ Om D , व्याति । विविधमड-तीति यडस॰ A

ता । सुता ॥ * ॥ तिस्रः ॥ युष्मभ्यम् ॥ चतस्रः ॥ अस्मभ्यम् ॥ * ॥ यतत उत्सहते हितप्रतिपादनेनेति याता ॥ * ॥ पञ्च ॥ सप्त[1] ॥ * ॥

युष्मदस्मदोराब्डि प्राप्तेऽन्येषां तु डीप्रत्यये प्राप्ते प्रतिषेधः[2] ॥ पाणिनिप्रभृतयस्तु युष्मदस्मदोर्गणे पाठं न प्रदर्शयन्ति[3] । अलिङ्गत्वात् । एतच्चायुक्तम् । यतो नान्ता संख्याऽप्यलिङ्गैव ततस्तेऽपि तत्प्रदर्शनं किमिति कृतवन्तः । तस्मादत्र शब्दतत्त्वज्ञा एव प्रमाणम् ॥ ननु तिसृचतसृ इत्यत्र त्रिचतुरोर्विभक्तिसंनिपातेन तिसृचतस्रावुच्येते[4] तत्र संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति डीर्न भविष्यति[5] । सत्यम् एतदेव ज्ञापयति । अनित्येयं परिभाषा । तेन या सेत्यादौ[6] विभक्तिसंनिपातलक्षणस्त्यदाद्यकार आड्विधिनिमित्तं स्यात्[7] ॥ ४२ ॥

इति स्वस्रादिः ॥

क्रोडवालागला भालभगोखाः[8] खुरसंयुताः ।
शफो भुजो गुदो घोणाकरौ[9] क्रोडादिनामनि[10] ॥ ४३ ॥

क्रोडशब्दः स्त्रीलिङ्गः । विष्टा मञ्जिष्ठा काष्ठेत्यादिलिङ्गकारिकासामर्थ्यात् । कल्याणी क्रोडा यस्याः सा कल्याणक्रोडा गौः[11] । नना क्रोडं भुजान्तरमिति वचनादपि च[12] ॥ रत्नमतिस्तु कल्याणः क्रोडो

१ सप्तसु । F , हितप्रतिपादनानिति याता । एव पञ्च° C

२ प्राप्ते च निषेध

३ प्रवेशयति C

४ तिसृ चतसृ पठ्येते C

५ °अनिमित्ततद्विघातस्येति टाप् न° C

६ परिभाषापातिनयासेत्यादौ B , यासयोरित्यादौ C , D corr याते त्यादौ

७ °त्यदाद्यकारा° C , A om this sloka and comment, and the beginning of sloka 43 to क्रोडवालाग, see note ७ on preceding page

८ °बालगला° F , °गला नालभ°D

९ °घोणे करौ B , गुद घो° D

१० क्रोडादिनामिति C

११ क्रोड यस्या • A , सा कल्याणा क्रोडा गौ B

१२ वचनान्नपिच A , B om from नना°, Am K 2, 6, 2, 23

न्नीमालिङ्गेनृत्यवे गुहतन्त्रग: ॥ चुञ्चिग्व[1] ॥ * ॥ पिपर्ति । पिप्पली । वैदेही ॥ * ॥ वैजयन्ती । पताका[2] ॥ * ॥ विकली ॥ विकलनिष्कलपुष्कलशब्देभ्यो[3] वनस्पतिष्वेतेभ्य एव ङीविधिः संभाव्यते रूढितः । अन्यत्र विगता कला यस्याः । विकला । निष्कला । पुष्कला धनर्द्धिरित्येवं स्यात्[4] ॥ वामने च । छली सराज्ञा यदि पुष्कला स्यात्[5] ॥ छित्तपस्तु[6] ।

न पुष्कली[7] ते स्वर्लोके जनता किंतु सामरी ।
विकली यत्क्षमात्रेण महती निष्कलीयते[8] ॥

इति सामान्येनाह ॥ कथं विकला कालविशेषवाचिनो नित्यस्त्रीविषयत्वादावेव भवतीति भोजोऽपि ॥ * ॥ मठन्ति निवसन्त्यस्यामिति मठी ॥ * ॥ करीरी[9] । करिदन्तमूलम् ॥ * ॥ केतकी ॥ * ॥ श्वासानी । संसत्[10] ॥ * ॥ चोरयतीति चोरी । तथा च ।

नृचित्तचोर्य[11] सुन्दर्यो दृढ[illegible]तटाः[12] ।
नदीगाहोत्सवौघे इव [illegible][13] ॥

हयमनुष्ययोर्जातित्वेऽपि [illegible][14] । उभयदास[illegible]हरिणामरचोराणामजातित्वात्[15] । [illegible] तु [illegible]त्वेऽपि स्त्रीविषयत्वादप्राप्ते पाठः[16] ॥ ४१ ॥

द्रुणविटसरसायःस्थूणसौधर्ममाचाः[१]
पटललवलपादा वल्लकालम्बिनाचाः[२]।
अतसपृथिवभृङ्गाः कन्दलारट्टिदोटाः[३]
शमतमकुटपेटा[४] मञ्जरो निष्कलश्च[५] ॥ ४७ ॥

द्रुणी। कच्छपस्त्रिय एवोच्यन्ते न कच्छपाः पुमांसः ॥ * ॥ विटी। मत्सरः ॥ * ॥ सरसी। कर्णाटदेशे[६] प्रविद्धिरेषा हलन्तत्वादप्राप्ते ॥ * ॥ अयोमयी स्थूणा यस्य सोऽयःस्थूणः। तस्यापत्य शिवाद्यणि। आयःस्थूणी। ङ्यस्य प्राप्तौ ॥ अयोमयी स्थूणा यस्याः सा। अयःस्थूणी[७]। कुटी। तस्यान्यार्थे वृत्तिः स्वार्थे त्वयःस्थूणेति[७] स्यादिति कश्चिदाह ॥ आयस्थेणीति[८] केचित् ॥ * ॥ शोभनो धर्मो यस्य स सुधर्मा। तस्यापत्यं स्त्री सौधर्मी। ष्यणि ङ्यस्य[९] प्राप्तौ ॥ * ॥ माची[१०]। अम्बष्ठा ॥ * ॥ पटली। संघातः ॥ * ॥ लवली। लताविशेषः ॥ * ॥ पादी[११] ॥ * ॥ वल्लकी ॥ * ॥ अलम्बस्यापत्य स्त्री। आलम्बी[१२]। अत इञि ङ्यस्य प्राप्तौ[१३] ॥ * ॥ नाची ॥ * ॥ अतति गच्छति नीलैः कुसुमैः स्नेहवद्दीजानीति[१४]। अतसी। उमा ॥ * ॥ पृथिवी ॥ पाणिनिप्रभृतयस्तु ङीप्रत्ययान्तमाहुः ॥ * ॥ भृङ्गी।

---

१ द्रुणविट° A B C [D om this sl with comment, cf p ८०, note १६], °सरसाय. स्थौण° B C, सरसोऽयःस्थूण° E, °मासा. C

२ °लवलवालापादावलकालविनाचा A, वल्लकालवनाचा F

३ Thus A B F, कदलारट्टदोटा C, कंदलारदर्दोटा E [आरट sl 44]

४ °कुठपेटा A, °कुटपेता E

५ निष्कुलश्च MSS

६ Cf Mbh on P i 1, 19 दक्षिणापथे हि महान्ति सरांसि सरस्य उच्यन्ते

७ अय स्थूणा यस्य प्राप्तौ अयोमयी स्थूणा कुटी तस्यान्यार्थे न्वय। स्थूणेति C.

८ Cf Prâk थेणो or थूणो (S स्तेन) Hem 1, 147, आयस्थेणीति A, आयस्थूणीति C

९ ङ्यस्य B ङ्यस्य A

१० मायी B माचा C

११ पाटी A F

१२ F adds आलद्वी। कालद्वी (or आलद्दी। कालद्दी?) इति शाकटायन।

१३ अत प्राप्तौ A

१४ नाचा ॥ अनति तिसे °स्नेहपदाज्जानाति C

न्तीमालिङ्गेन्मृत्यवे गुरुतल्पगः ॥ चुल्लिश्च[1] ॥ * ॥ पिपर्ति । पिप्पली । वैदेही ॥ * ॥ वैजयन्ती । पताका[2] ॥ * ॥ विकली ॥ विकलनिष्कलपुष्कलशब्देभ्यो[3] वनस्पतिवृत्तिभ्य एव ङोविधिः संभाव्यते रूढितः । अन्यत्र विगता कला यस्याः । विकला । निष्कला । पुष्कला धनर्द्धिरित्येवं स्यात्[4] ॥ वामने च । इतो सराशा यदि पुष्कला स्यात्[5] ॥ छिन्नपस्तु[6] ।

न पुष्कली[7] ते स्वर्लोके जनता किंतु सामरी ।
विकली शल्कमात्रेण महती निष्कलीष्यते[8] ॥

इति सामान्येनाह ॥ कथं विकला कालविशेषवाचिनो नित्यस्त्रीविषयत्वादाबेव भवतीति भोजोऽपि ॥ * ॥ मठन्ति निवसन्त्यस्यामिति मठी ॥ * ॥ करीरी[9] । करिदन्तमूलम् ॥ * ॥ केतकी ॥ * ॥ आस्थानी । संसत्[10] ॥ * ॥ चोरयतीति चोरी । तथा च ।

नृचित्तचोर्यः[11] सुन्दर्यो दुरुद्वहकटीतटाः[12] ।
नदीगाहीलवीचर्य इव यद्भ्रमभाभसि[13] ॥

हयमनुष्ययोर्जातित्वेऽपि योपान्त्यत्वात्[14] । उभयदासपिशङ्गहरिणामरचोराणामजातित्वात्[15] । इतरेषां तु जातित्वेऽपि स्त्रीविषयत्वादप्राप्ते पाठः[16] ॥ ४६ ॥

---

१ दुल्लिश्च B ; व्युत्पत्तिश्च C.
२ उपकारिका C.
३ A om पुष्कल; cf p 87, l 4.
४ °इति स्यात् A ; पुष्कला इत्येवं स्यात् C.; धनरिद्धिरित्येवं° D.; धनवृद्धिरित्ये° F
५ Vâm Kâvyâl. 4, 1, 2; D. om from वामने
६ Thus A. B D ; छिनत्ति यस्तु C.; वित्तपस्तु । F. Probably *Chhinnama* (? *Chhinnapa*)
७ पुष्कला F
८ शत्नमात्रेण° A ; शक्कमात्रेण° B C ; निष्कलायत B C. F.
९ करारी C.
१० शशत् A.
११ °चौर्यः A. D.; नृचिह्नचोर्यः B.; हृचिह्नचोर्यः C
१२ सौदर्यो° D ; °तटा । A.
१३ पद्मभ्रमभासि D.
१४ °योपांतत्वात् A.
१५ °पिसंगः । राहरिणामंचोराणामजातित्वात् A.
१६ D. om. from हयमनुष्ययोः

द्रुणविटसरसायःस्थूणसौधर्ममाचाः[1]
पटललवलपादा वल्ककालम्बिनाचाः[2] ।
अतसपृथिवभृङ्गाः कन्दलारट्टदोटाः[3]
शमतमकुटपेटा[4] मञ्जरो निष्कलस्य[5] ॥ ४७ ॥

द्रुणी । कच्छपस्त्रिय एवोच्यन्ते न कच्छपाः पुमांसः ॥*॥ विटी । मत्सरः ॥*॥ सरसी । कर्णाटदेशे[6] प्रसिद्धिरेषा हलन्तत्वादप्राप्ते ॥*॥ अयोमयी स्थूणा यस्य सोऽयःस्थूणः । तस्यापत्यं शिवाद्यणि । आयःस्थूणी । ङ्यस्य प्राप्तौ ॥ अयोमयी स्थूणा यस्याः सा । अयःस्थूणी[7] । कुटी । तस्यान्यार्थे वृत्तिः स्वार्थे त्वयःस्थूणेति[7] स्यादिति कश्चिदाह ॥ आयस्थेणीति[8] केचित् ॥*॥ शोभनो धर्मो यस्य स सुधर्मा । तस्यापत्यं स्त्री सौधर्मी । ष्यञणि ष्यस्य[9] प्राप्तौ ॥*॥ माची[10] । अम्बष्ठा ॥*॥ पटली । संघातः ॥*॥ लवली । लताविशेषः ॥*॥ पादी[11] ॥*॥ वल्कली ॥*॥ अलम्बस्यापत्य स्त्री । आलम्बी[12] । अत इञि ङ्यस्य प्राप्तौ[13] ॥*॥ नाची ॥*॥ अतति गच्छति नीलैः कुसुमैः स्नेहवद्वीजानीति[14] । अतसी । उमा ॥*॥ पृथिवी ॥ पाणिनिप्रभृतयस्तु ङीप्रत्ययान्तमाहुः ॥*॥ भृङ्गी ।

---

१ द्रुणविट० A B C [D om this śl with comment, cf p ८०, note १६], ०सरसाय. स्थौण० B C, सरसोऽयःस्थूण० E, ०मावा C

२ ०लवलवालीपादावल्ककालविनाधा A, वल्ककालवनाचा F

३ Thus A B F, कदलारट्टदोटा C., कंदलारद्दोढा F [आरट śl 44]

४ ०कुठपेटा A, ०कुटपेता E

५ निष्कुलस्य MSS

६ Cf Mbh on P i 1, 19 दक्षिणा[illegible]

७ अय स्थूणा यस्य प्राप्तौ अयोमयी स्थूणा कुटी तस्यान्यार्थे न्वय । स्थूणेति C

८ Cf Prâk थेणो or थूणो (S स्तेन) Hem 1 147; आयस्थेणीति A, आयस्थूणीति C

९ डास्य B, यस्य A

१० मावी B मावा C

११ पाटी A. F

१२ F adds आलम्बी । कालम्बी (or आलह्वी । कालह्वी?) इति शाकटायन ।

१३ अत प्राप्तौ A

१४ नावा । अतति तिले ०स्नेहवद्वा[illegible]

न्ति ॥ शोणी । शोणा । रक्तवर्णयुक्ता ॥ कश्चित्संज्ञायामपि शोणी शोणा वडवेति[१] ॥ * ॥ भरुजी । भरुजा । स्नेहभ्रष्टाः किल तण्डुलाः[२] ॥ * ॥ तूणी । तूणा । तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति[३] । वीणा धिषणा तूणा[४] स्थूणेत्यादि ॥ * ॥ कमली । कमला नाम काचित् ॥ * ॥ विकटी । विकटा । रचना ॥ * ॥ दीर्घाह्नी । दीर्घाह्ना शरत्[५] ॥ अहन्शब्दः केवलः स्त्रियां न संभवति नित्यं नपुंसकलिङ्गत्वात्[६]। अतस्तदन्त उदाहृतः ॥ अह्नी । अह्ना । इति कश्चित् केवलस्य स्त्रियामुदाहरति ॥ * ॥ चान्द्रभागी वनराजिः । चान्द्रभागा[७] नदी । टिड्ढाणञित्यादिना[८] ङी प्राप्तः स शोणादिपाठान्नद्यां निषिध्यान्यत्र विधीयत इति विकल्पार्थः ॥ चन्द्रभागा नद्यामिति केचिदाहुः[९]। यदृच्छया चन्द्रभागी[१०] चन्द्रभागा काचित् । नदी तु चन्द्रभागेति[११] मतद्वयं वामनाचार्यस्य[१२]॥ पाणिनिशकटाङ्गजौ तु चन्द्रभाग इव भागो यस्याश्चन्द्रभागी[१३] चन्द्रभागा नाम नदी । अन्यत्र चन्द्रभागा[१४] नाम देवता स्त्री वा काचिदित्याहतुः ॥ केचित्तु चन्द्रभागो नाम पर्वतः । ततः प्रभवतीत्यणि । चान्द्रभागी चान्द्रभागा[१५] नदी । चान्द्रभागस्येत्युदाह-

---

१ श्रोघी । श्रोघा ॥ C, cf Pân iv. 1, 43

२ स्नेहभ्रष्टा किल तंडुला । A, स्नेहपृष्टा किल तडुला C, स्नेहभ्रष्टा.° F

३ Raghuv 9, 56

४ धिषणाख्या D

५ ? दीर्घाह्नी । दीर्घाह्ना । दीर्घाहा शरत् B C, दीर्घाही । दीर्घाहा । दीर्घाहा वर्षा । D, सरत् A, शरत् । प्रावृट् F

६ नपुंसकत्वात् B C F

७ चद्रभागा F

८ P iv 1, 15, B C F om ङी

९ Thus Kâs V iv 1, 45

१० Om C

११ नदी चद्रभगेति D

१२ °द्वय । वामनाचार्यैश्च पा° C

१३ Om B, F om from चन्द्रभागा काचित्.

१४ चद्रभागो C

१५ तत भवतीत्यणि चद्रभागी चांद्रभागा A

रन्ति[1] ॥ भोजस्तु चान्द्रभागादनद्यामिति[2] सूत्रं पपाठ ॥ * ॥ त्यर्थशून्यादिकारतः । त्यकरणाविति क्तिप्रत्ययो भावाकर्त्रोर्विहितस्तदन्तस्तदर्थप्रत्ययान्तो वा यो न भवति[3] । ततोऽनेन ङी विकल्पितः । अशनिः । अशनी ॥ शक्तिः । शक्ती । शस्त्रम्[4] ॥ आत्मंभरिः । आत्मंभरी ॥ त्यर्थशून्यादिति किम् । शक्तिः सामर्थ्यम् ॥ कश्चिदस्मादपि ङीं मन्यते । अहरणिः । कां त्वं कारिमकार्षीः[5] ॥ ५२ ॥

चण्डः पद्धतिकल्याणपुराणकृपणध्वजाः[6] ।
विशालारालमूपा हन्वहूदारविसङ्कटाः[7] ॥ ५३ ॥

चण्डी । चण्डा । परुषा ।

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ[8] ॥

चण्डारालशब्दयोर्गौरादिलक्षणे ङीप्रत्यये सिद्धे बह्वादौ[9] पाठः संज्ञायां विकल्पार्थ इति शाकटायनः ॥ * ॥ पादयोर्हतिः[10] । पद्धतिः । पद्धती । त्यर्थः पाठः ॥ * ॥ कल्याणी । कल्याणा कथा ॥ * ॥ पुराणी । पुराणा छाया ॥ * ॥ कृपणी । कृपणा नाम काचित् ॥ * ॥

---

१ चांद्रभाग्या इत्युदा° C

२ ? चांद्रभागादनद्यामिति A, चांद्रभागी श्वनद्यामिति C, चंद्रभागाद° F The *Kâtantraparisishta* remarks चान्द्रभागादनद्याम् । अनद्यामर्थे चान्द्रभागादीर्भवति । चन्द्रभागभवा चान्द्रभागी श्रुतिः ॥ अनद्यामिति किम् । चन्द्रभागनामगिरिः । तत्र भवतीत्यपि चान्द्रभागा नदी ॥

३ भावाकर्त्रो वि° B, भावाकर्त्तोर्वि° A; त्यकरणाविति° भावात्कर्त्रोहितस्त° C, भावकर्त्रोर्विहित° F, °प्रत्ययांते° B C, D corr °तदंतस्तदर्थप्रत्ययांता ख्याटो न भवति

४ शक्ता । शस्त्र आ° C, भित्रत्कारिः । भत्रत्कारी । वत्सा । D, शस्त्रं । भत्रत्कारि. । भत्रत्कारी F

५ ङीप् मन्यते° C, मन्यते । सामर्थ्यात् । अहरणि. । का त्वं° A, त्यर्थ° कि । शक्ति. । हति. । अहरणिः । कां त्वं° D F, अहरति. ।° B C.

६ चंडपद्धति° B C.

७ °विसंकटाः F

८ Raghu 12, 5

९ शोणादौ F, *Sâkatâyana* apparently begins this *gana* with बह्व

१० पादयोहत A.

कान्यव्यायनी[१] ॥ * ॥ वार्च्यायणी[२] ॥ * ॥ मान्तव्यायनी ॥ * ॥ तान्तव्यायनी[३] ॥ * ॥ तानव्यायनी[४] ॥ * ॥ माङ्कव्यायणी ॥ * ॥ तारुच्यायणी[५] ॥ ५८ ॥

गुहलुः संशितः शङ्कुमनायीलिगुसम्बवः[६]।
वतण्डः शकलो मङ्खुलतुच्यक्षजिगीषवः[७] ॥ ६० ॥

गौहलव्यायनी[८] ॥ * ॥ सांशित्यायनी[९] ॥ * ॥ शाङ्कव्यायनी ॥ * ॥ मानाय्यायनी ॥ * ॥ लैगव्यायनी[१०] ॥ * ॥ साम्बव्यायनी[११] ॥ * ॥ अनाङ्गिरसी तु वातण्ड्यायनी[१२]। शिवादिपाठाद् वातण्डी। आङ्गिरसी तु वतण्डी[१३]। अस्त्रीयपाककर्णपर्णपुष्पफलमूलवालान्ताज्जातेरित्यनेन[१४] ङीप्रत्ययः ॥ * ॥ शाकल्यायनी ॥ * ॥ माङ्खव्यायनी[१५] ॥ * ॥ लातव्यायनी[१६] ॥ * ॥ आर्च्यायणी। रौच्यायणीत्यन्यः[१७] ॥ * ॥ जैगीषव्यायणी ॥ ६० ॥ इति लोहितादिः ॥

---

१ कांयव्यायनी A D, कायकायनी C
२ वार्धायणी D, याच्चायिणी B
३ Om A, तांतयायनी E
४ तानयायनी B, om F, °मायायणी D
५ तारव्यायणी B C F
६ शकुमनावी E and corr D, संकुमनायी लिगुसंवध A, °संववा. B C, सवच D, संचच E, लिंगुसंवव F
७ वतड सकलो° B, मन्युलतु E, मंखुलतु° F, °स्नतु° E, च्यक्षजिगीयव A
८ गोहलव्यायनी A D
९ शांशित्यायनी A, सासित्यायनी B C
१० शांकयायनी लिमव्यायनी B, लैगव्यायनी F, मानायव्यायनी° C, मानाव्यायनी° D
११ सावव्यायनी A B C D, Kās V MS I O 2440 has शबु (not शङ्कु)
१२ अनांगिरसा° B, वातड्यायनी C, for शिवादि° see gl 212
१३ आंगिरसात्तु° E, वतुडी B
१४ (अ obliterated) स्त्रीपाक° D, cf P ıv I, 63-4
१५ माख्ययायनी B, मांखव्यायनी A, D corr मान्यव्यायनी
१६ लातवयाव्यनी B, D corr लानव्यायनी, लातव्यायनी F
१७ Thus D F, आच्यायनी। त्यन्य। A, आचायणी रौचायणी रौचायणीत्यन B, आर्चायणी। रौचायणी। रौचायणीत्यत E

यच्छन्दो मेनका चाथ दण्डकापिप्पकेष्टकाः।
रेवका धारका चैव द्वारकादेवकैरकाः[1] ॥ ६१ ॥

यदादय एडकान्ताः स्युः। तोऽयदाम्[2] इत्यनेनाकारस्येत्वं यत्प्राप्तं यदादिपर्युदासात् तद्भावो न भवन्ति ॥ यका ॥ ० ॥ मनिपचिमचां नाम्नीत्यनेनाकारस्यैत्वे[3]। मेनका। अप्सराः ॥ ० ॥ दण्डका। अरण्यम् ॥

वर्षाणि तिष्ठतु चतुर्दश दण्डकायाम्[4] ॥

प्राप्तानि दुःखान्यपि दण्डकेषु संचिन्त्यमानानि सुखीयभूवुः ॥

इति रघुकाव्ये चिन्त्यम्[5] ॥ ० ॥ पिप्पका ॥ ० ॥ इष्यते काम्यते प्रासादादिषु या सा। इष्टका मृद्विकारः ॥ ० ॥ रेवा नदी। ततः संज्ञायां के। कुत्सादौ वा। रेवका ॥ ० ॥ धारयतीति धारका ॥ ० ॥ द्वारसकारा। द्वारका नगरी[6] ॥ यथा धनंजयस्य।

चलत्पताकामुदङ्कतोरणां तावविचताम्।
द्वारका गोपुरद्वारैः किष्किन्धनगरीमिव[7] ॥

देवका। अप्सराः ॥ ० ॥ एरका। उदकतृणजातिः ॥ ६१ ॥

क्षिपका ध्रुवका चरका तत्सेवकया करकाचटके स्तः[8]।
अवकालहके अलका स्यात् कन्यकया ध्रुवकेडकया च[9] ॥ ६२ ॥

क्षिपतीति क्षिपका। आयुधम् ॥ अथवा। अज्ञाता क्षिपा। क्षिप-

---

१ रेवका द्वारका चैव द्वारकादेव° A ; °द्वारकादेव° I.

२ ? एडकान्तास्यातोयदाम् A D ; °तास्यातोय° ; एडकान्तास्यातोद° B ; एडकान्तास्यातोय° C ; cf P vii 3, 45 46.

३ मनिपचिपचां° B I ; मेनेति च विपची° C ; मनिपचिमचां नाम्नीत्य° D ; cf Ms. V vii 130 ; C p. 5 37

४ Anargh ar (Calc E 1782 p 116) 4 68.

५ Raghuv 14 25

६ द्वारका नदी नगरी B C.

७ द्वारकागोपुर° A B C original D ; किष्किन्धनग° F ; किष्किन्धन° B D

८ क्षिपकाध्रुवकाचटका सेव° I.

९ अवकालहके °ध्रुवके° I.

योधैर्योधानि हन्यन्ते क्रोधान्धैः सिन्धुरैर्गजाः ।
न गण्यते स्वपचोऽपि धिक् क्रोधमसमञ्जसम् ॥

औषधो भेषजम् ॥*॥ स्थानम् । आधारः ॥*॥ शूर्प[1] मानविशेषः ॥*॥ निधनो मृत्युः ॥*॥ शयनः शय्या ॥*॥ दीपम् । अन्तरीपः ॥*॥ पुच्छं लाङ्गूलम्[2] ॥*॥ आयुधो हेतिः ॥*॥ यूथः पशुसमूहः । द्वयोर्यूथयोः समाहार इति विग्रहे द्वियूथमित्यपि शाकटायनः ॥*॥ गूथो विष्ठा ॥*॥ कुणपं शवः ॥*॥ कुं तपति सूर्योऽत्रेति कुतपः श्राद्धकालः । यत्स्मृतिः ।

दिवसस्याष्टमे भागे मन्दीभवति भास्करः[3] ।
स कालः कुतपो यत्र पितृभ्यो दत्तमक्षयम् ॥

यद्वा छागरोममयो वस्त्रविशेषः ॥*॥ क्षेमः । कुशलम् ॥*॥ वर्णम् । अक्षरम् । शुक्लादिद्विजादिश्रुतिवाची तु पुंलिङ्गः[4] ॥*॥ आसनः पीठम् ॥ आवृत्या । असनं[5] वृक्षविशेषः ॥*॥ छत्त्र आतपत्रम् ॥*॥ आकाशो नभः ॥*॥ प्रतिसरः । कङ्कणं वाहिनीजघनं च[6] ॥*॥ मुखो वदनम् ॥*॥ अष्टसु लोहेषु पदं प्रतिष्ठाऽस्येति संज्ञायामष्ट[7] इत्यनेनात्वे । अष्टौ पदान्यत्र । अष्टापदः शारीफलम्[8] । अष्टापदः सुवर्णम् ॥*॥ अरण्यः । अटवी ॥*॥ वर्षं वृष्टिः संवत्सरश्च । यथा । पुष्पवर्ष इव मौक्तिकवर्षः[9] ॥ ६६ ॥

---

१ शूर्पं all MSS

२ पुच्छं भांडे लाङ्गूलं F

३ °भास्करे A B C F ; Sabdakalp. s.v. कुतप reads °र: । स कालः कुतपो ज्ञेयः पितॄणामक्षयप्रदम् ॥ इति शातातप । cf Schol on Hem Abh 141 Acc to Prof Roth, not in Sāt in Calc Smṛitis. The Vishnupatram has °र: । स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥ सत्° पु° The Matsyap., acc to Prof Haas, has । तथाष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥ मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः ।

४ शुक्लादिद्विजातिश्रुति° B C F

५ असुत्या° B ; आसनं F

६ प्रतिसर.° D , °कङ्कणं ; वाहिनी जघनं च ।

७ Cf Pāṇ vi 3, 125

८ सारीफलं A ; शारफलं B ; शारीरफलं C ; शारिफलं E.

९ D has only वर्षं संवत्सरः ; cf Ks. 10 74; पुष्पवृष्टिरिव मौक्तिकवृष्टिः edn.

कमण्डलुर्मण्डपकुट्टिमार्बुदा-
ऽवतंसपाराः शतमानचन्दनौ[1]।
समानयूपौ दृढमूषिकौदना[2]
दिनं विमानं च वितानलोहितौ ॥ ६७ ॥

कमण्डलुः करकं कुण्डिका च[3] ॥*॥ मण्डपं जनाश्रयः ॥*॥ कुट्टेन निर्वृत्तः। पण्यभावादिम[4] इत्यनेन। इमप्रत्यये। कुट्टिमो बद्धभूमिकम्[5] ॥*॥ अर्बुदो दशकोटिरचलो व्याधिश्च[6]। पर्वते तु पुलिङ्गः ॥*॥ अवतंसं शेखरम्[7] ॥*॥ पारः परतीरम् ॥*॥ शतं मानानामस्य[8]। शतमानो भूभागविशेषः ॥ यद्वा। शतमानं रूप्यपलम् ॥ यत्स्मृतिः[9]।

द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते।
शतमानं तु दशभिर्धरणैः पलमेव च ॥*॥

चन्दनो मलयजम् ॥*॥ समानं सदृशम् ॥*॥ यूपो मुद्गनिर्यासः ॥*॥ दृढोऽविनष्टम् ॥*॥ मूषिकम्[10]। आखुः ॥*॥ उद्यते मिश्यते व्यञ्जनैरिति। ओदनम्[11] ॥*॥ दिनो वासरः ॥*॥ विमानो देवतायानं सप्तभूमिकगृहं च[12] ॥*॥ वितानो याग उल्लोचो विस्तारश्च। तुच्छवाची तु त्रिलिङ्गः ॥*॥ लोहितं शोणितम्। गुणवचनस्तु वाच्यलिङ्गः। लोहितो गौः। लोहिता शाटी। लोहितं वस्त्रम् ॥ ६७ ॥

---

१ वतंसपरा॰ E, शततमानं चंदनौ B
२ समानयूपौ A; ॰मूषकौदना F
३ कुटिका च B, कुंटिका च C.
४ Thus A (? पलाय), ॰पणशाणा॰ B, पणपशाणा॰ C; पक्वावादिम D; पणभावादिम E, cf P iv 4,20
५ ॰भूमिका D
६ ॰कोटि वचसो व्याधिश्च D
७ शेषरं B F
८ शतं मानमस्य D F
९ Yājn I 363-4
१० मूषकं F
११ उद्यते मथ्यते पच्यते इत्योदनं D
१२ देवयान E, ॰कं गृहं च B C F

संपिण्डिताङ्गावयवा उटीयुः पद्मा नवाः कण्टकितोर्ध्वदण्डाः[1]।
अन्तर्जलावासविरूढशीतत्रस्ता वसन्तातपकाम्ययेव[2]॥

आषाढम्। व्रतिनां दण्डं माषश्च ॥ * ॥ कपित्थो वृक्षविशेषः ॥ * ॥ षष्टिकं व्रीहिभेदः ॥ * ॥ कुलोऽभिजनो गृहं च ॥ * ॥ अम्भोजः कमलम् ॥ * ॥ वाजं पिच्छम्[3] ॥ * ॥ अमृतम्। सलिलं[4] सुधा मोचो द्रव्यं च ॥ * ॥ स्थूलं दृढः ॥ * ॥ द्यूतो दुरोदरम् ॥ * ॥ खलीनं कविकम्। खलिनेति[5] शाकटायनः ॥ * ॥ लोहोऽयःप्रभृतिद्रव्यविशेषः ॥ * ॥ कवचः संनाहः ॥ * ॥ अशोकं तरुविशेषः ॥ * ॥ चयं गृहम् ॥ * ॥ अनेकपं हस्ती ॥ * ॥ शङ्खं कम्बुः। निधिललाटाम्बिवचनस्तु पुंलिङ्ग एव ॥ * ॥ तण्डकम्। छन्दोगयोग्यो ब्राह्मणो वस्त्रविशेषः[6] परिष्कारो दण्डको वा ॥ * ॥ धर्मोऽदृष्टार्थवाची[7]। तत्साधनवाची तु नपुंसकलिङ्गः[8]। तानि धर्माणि प्रथमान्यासन्[9] ॥ अमरसिंहस्तु धर्ममस्त्रियामिति[10] पठन् सामान्येनाह। धर्माः पुण्ययमन्यायस्वभावाचारसोमपा इति च[11] ॥ * ॥ चर्मोऽजिनम् ॥ * ॥ रजतो रूप्यं श्वेतं च ॥ * ॥ स्नेहं सौहृदम् ॥ * ॥ असि खड्गः ॥ * ॥ हंसं मितच्छदः ॥ * ॥ अपरोऽपरमन्यत् ॥ * ॥ वारी

१ कंटकितागदधा. A

२ ॰तत्रस्ता च। सविवृद्धशीतव आतप॰ A.; ॰काम्ययेव C F, ॰वतस्रामावातवसन्तशीतवस्ता वसन्तातप॰ D

३ पित्थं B; पिछं D

४ शलिलं B C. D; सलिला A

५ खलिनेति A.

६ C om. from कवचः संनाह॰ ; ॰परिष्कारो B C. D

७ धर्मो दृष्टार्थवाची B C.

८ तत्साधनवाची च पुलिंग. A D

९ Rigv. I 164, 43; V. S. 31, 16.

१० A. K. I. I. 4. 2; धारणाद्धर्मः। यागादि नपुंसकम्। तानि धर्माणि प्रथमान्यासन्। अन्ये तु पुमान्। एष धर्मः सनातन.। इति विशेषोऽस्य नेष्ट'। लोकधर्मो मात्यधर्मीति पारिभाषिको धर्मशब्दोऽप्यस्ति। Kshir

११ A. K. 3, 4, 141, पुण्य'। यागाद्यहिंसा वा। यमो धर्मराजः। धर्मस्तु भीमवत्। न्याये च। धर्माधिकारिवत्। स्वभावे यथा कूरधर्मा। आचारे यथा धर्मग्राम्यम्। सोमपे यथा। एष धर्मः सनातन। युधिष्ठिरपितापि तावदेव। धर्मसाधने यागादौ च क्लीवे। यच्छ्रुतिः। तानि धर्माणि प्रथमान्यासन्। Kshir

कान्तारो महारण्यं दुर्गपथश्च ॥ * ॥ राष्ट्रम् । जनपद उपद्रवश्च । परराष्ट्रभयम्[१] ॥ * ॥ पटहं डिण्डिमः ॥ * ॥ गृहो वासः । गृहाः पुंसि च भूम्न्येवेति कश्चित्[२] ॥ * ॥ कं शिरः पाटयति प्रविशताम् । जपादित्वात् । कवाटो द्वारपिधानम्[३] ॥ * ॥ कुक्कुटं ताम्रचूडः । अमरसिंहस्तु कुक्कुटः पुंस्येवेत्याह[४] ॥ * ॥ आर्द्रः शृङ्गवेरम् ॥ * ॥ धामा गृहं तेजश्च ॥ ७१ ॥

पद्माषाढकपित्थषष्टिककुलान्यम्भोजवाजामृताः[५]
स्थूलद्यूतखलीनलोहकवचाशोकक्षयानेकमाः ।
शङ्खस्तण्डकधर्मचर्मरजतस्नेहासिहंसापराः
सारः सैन्धवमध्यमाध्वरधनुर्मानस्तनस्यार्णवः ॥ ७२ ॥

पद्मो जलजम् । निधिवचनस्तु पुलिङ्ग एव । यथा श्रीहर्षस्य ।

अच्छिन्नामृतबिन्दुवृष्टिसदृशीं प्रीतिं दधत्या दृशा[६]
याताया विगलत्पयोधरपटाद्द्रष्टव्यतां कामपि ।
अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वं गता
यन्नैते[७] मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥

यथा वा कुमारिलस्य[८] ।

---

१ परराष्ट्रं भयं C

२ Viz, Amaras 2, 2, 5

३ कं शिरः पाटयति प्रविशतां कवाटो द्वारपट्ट । जपादित्वाद्दन्त्य Kshir on A K 2, 2, 17 — Vardh does not give the *japâdi* in this work

४ A K 2, 5 17

५ पद्मपाटक॰ E., पद्मापातकपि॰ ॰कपिच्छषष्टि॰ A

६ Priyadarśikâ (Calc S 1931) 2 7 ददत्या for दधत्या ed , दृशा यताया॰ A , दृशो या॰ F , दृशो यो विग॰ B , दृशो या विगलत्॰ C , दृशोर्यताया विगलसत्पयो॰ H , पयोधरपदद्रष्टव्यतां॰ MSS

७ मैते यस्मु॰ ed Calc , यन्नैते B ; यचेते C ; यचेते D , ॰मुकुलीभ॰ A , मुकुलीभ॰ H

८ कुमारलस्य C.

राजदन्तः। प्रमुखदृश्यदन्तद्वयम्। अत्र षष्ठीत्यनेन[1]। यदा तु राजा च दन्ताश्चेति समासान्तरं[2] तदा न नियमः ॥ * ॥ पूर्वमुतम्[3] आतानवितानीकृतं पश्चादर्पितम्। अर्पितोतम्। यथा।

ज्योत्स्नापटे तुहिनदीधितिनार्पितोते[4]
द्यौरास नग्नमुषितेव हृतेऽरुणेन[5]।
व्योमोप्तगाढमिव भानुमरीचिसस्यं[6]
विक्लिन्नपक्वफलिनीफलवच्च बभ्रे ॥[7]

पूर्वं पक्वं पश्चादवक्लिन्नम् आर्द्रम्। अवक्लिन्नपक्वम्।[8] अनयोरेकादिसूत्रेण ॥ * ॥ शतात्परे। परःशताः। यथा।

स जवेन पतन्परःशतानां पततां व्रात इवारवं वितेने[9]।

पृषोदरादित्वात्सकारागमः। अत्र पञ्चमीसूत्रेण[10] ॥ * ॥ ना चासौ वरश्च। नृवरः। प्रधानपुरुषः ॥ * ॥ वनस्यारे। अग्रेवणम्। अत एव पाठात्सप्तम्या अलुक्। अत्भावश्चाव्ययीभावत्वात्।

बहुधा भिन्नमर्माणो[11] भीमाः खरणसादयः।
अग्रेवणं वर्तमाने प्रतीच्यां चन्द्रमण्डले ॥

वनस्याग्रम् अग्रेवणमित्येके[12]। निपातनाण्णत्वम्। अत्र षष्ठीसूत्रेण ॥ * ॥ पूर्वं लुञ्चितम् अपनीतं पश्चात्कृष्टं पक्वम्। कृष्टलुञ्चितम्। यथा।

---

१ Cf Pāṇ ii 2, 8

२ यत्ता तु राजदंताश्चेति॰ A, ॰स मासानंतरं C

३ पूर्वमूतं F

४ दीधितिनार्पितोते F

५ हृतेऽरुणेन A B C

६ गस्तं A D F ; सस्यविक्लिन्न॰ C. B om from the beginning of śloka 77 to व्योमोप्तगाढमिव

७ ॰फलवभ्रुपूर्वम्॰ C ; फलिनीफल॰ वच्च बभ्रौ D

८ A B add विक्लिन्नं.—For एकादिसूत्रेण cf Pāṇ ii 1, 49

९ Kirāt 13, 29

१० Cf Pāṇ ii 1, 37-9

११ ॰मर्माणो all MSS ... D

यङ्गुष्टलुञ्चितशस्येव शशाङ्कपात्री[१] ॥ * ॥

पूर्वं वासितं भावितं पश्चाल्लिप्तं दिग्धं लिप्तवासितं। अनयोरेकादिसूत्रेण।

यथा। यल्लिप्तवासितमिव द्युसदोऽञ्जवातैः ॥ ७८ ॥

उन्नगाढकुरुश्रेष्ठौ सिक्तसंमृष्टसंयुतौ[२]।

उत्तमर्णाधमर्णौ च परःसहस्र इत्यपि ॥ ७९ ॥

पूर्वं गाढम् अवलोडितं पश्चादुन्नम् उन्नगाढम्। अत्रैकादिसूत्रेण।

यथा। व्योमोन्नगाढमिव भानुमरीचिमस्त्रम्[३] ॥ * ॥

कुरुष्वासौ श्रेष्ठश्च। कुरुश्रेष्ठः ॥ * ॥ पूर्वं सम्मृष्टं पश्चात्सिक्तम्। सिक्त-संमृष्टम्[४] ॥ सिक्तसंमृष्टमित्यन्ये[५] ॥ अत्रैकादिसूत्रेण। यथा।

यत्सिक्तमृष्टमसृणेव नभोऽङ्गणश्रीः[६] ॥

ऋण उत्तमः। उत्तमर्णः ॥ ऋणेऽधमः। अधमर्णः। अत्र सप्तमी शौण्डैरित्यनेन[७] ॥ * ॥ सहस्रात्परे। परःसहस्राः। अत्र पञ्चमीत्यनेन ॥ शतसहस्रावित्युपलक्षणम्। तेन

परोरजोभिः स्वगुणैरगाधः सगाधिपुत्रोऽपि गृहानुपैति[८]।

इत्यपि सिद्धं भवति। पृषोदरादावप्येतद्द्रष्टव्यम्[९] ॥ ७८ ॥

कुबेरकेशवौ श्रद्धातपसी विष्णुवासवौ।

सोमरुद्रौ शिरोजानु चित्रास्वाती शिरोविज्ञु[१०] ॥ ८० ॥

---

१ यल्लिप्तवासितमिव द्वित्पदोञ्जवातैर्यत्सिक्तमृष्टममृणेव नभोंगणश्री. यङ्गुष्टलुंचितशसेव शशाङ्कपात्री तत्प्रातरासभक्ते। दिवधामसूर्यं। D

२ Thus D I ; सिक्तसंमृष्टसंयुतौ A B C F.

३ °मस्त्रं A D, C om from पूर्वं गाढे to कुरुश्रेष्ठ

४ पूर्वं संसृष्ट° सिक्तसंसृष्ट MSS

५ °समृष्टमित्यन्ये C, । संमृष्ट° F.

६ नभोंगणश्री A, ऽगण श्री. B

७ Pāṇ ii. 1, 40

८ Anarghar (Calc. S 1783) 1, 21.

९ एतत्सिद्धं द्रष्टव्यं F, cf ṡl. 145 G

१० °चित्रस्वाती° F, शिरोविज्ञु B C F, शिरोविदुः A, शिरोविज्ञ. D

जित्याविपूयविनीया. । विपूयविनीयजित्याः ॥ देवापिशन्तनू । शन्तनु-देवापी इत्यादयोऽपि भवन्ति ॥ ८८ ॥ इति राजदन्तादि ॥

कडारः पिङ्गलो गौरो भिक्षुकः खलतिस्तनुः ।
शौण्डः कुण्टो वृकः खञ्जो बठरो गडुलस्तथा[1] ॥ ८९ ॥

कडारादयः शब्दाः कडाराः कर्मधारये वेत्यनेन पूर्वं वा निपतन्ति । कडारजैमिनिः । जैमिनिकडार.[2] ॥ * ॥ पिङ्गलमाण्डव्य । माण्डव्यपिङ्गलः[3] ॥ * ॥ गौरगोतम' । गोतमगौरः[4] ॥ * ॥ भिक्षुकदाचिः । दाचिभिक्षुकः ॥ * ॥ खलतिखारपायणः । खारपायणखलतिः ॥ * ॥ तनुद्रणविन्दुः । द्रणबिन्दुतनुः । तनुशब्दः कृशवाची[5] ॥ * ॥ शौण्डलिगु' । लिगुशौण्ड.[6] ॥ * ॥ कुण्टमाण्टि. । माण्टिकुण्टः[7] ॥ * ॥ वृकशाण्डिल्यः । शाण्डिल्यवृकः ॥ * ॥ खञ्जवात्स्य' । वात्स्यखञ्ज.[8] ॥ * ॥ बठरच्छान्दसः । छान्दसबठर.[9] ॥ * ॥ गडुलगालव. । गालवगडुल' ॥ ८९ ॥

वृद्धखोडाविमौ काणः कूटखेलौ च कीर्तितौ ।
आहिताग्निगतार्थौढभार्यपीतघृतप्रियाः ॥ ९० ॥

वृद्धमनुः । मनुवृद्धः ॥ * ॥ खोडकहोडः । कहोडखोडः ॥ * ॥ काणद्रोणः । द्रोणकाणः ॥ * ॥ कूटदाचिः । दाचिकूटः ॥ * ॥ खेल-

---

१ खंडो पठरो° C, मठरोदुलस्त्था A, षंठरो° F
२ कडारजैमनि । जैमनिकडार (जैमनि क° A) A B D
३ पिंगलमाढव्य । माढव्यपिंगल F
४ गौरगौतम । गौतमगौर D F
५ कृशाऽर्थवाची F
६ लिगुशौंड D; शौंडलिंगु । लिंगुशौंड F
७ कुंडमांडि । मांठिकुंट A
८ खंडवात्स्य । °खंड । C
९ पठर' च्छांदस° A; पंठर° पठर F; षषर° । °षषट । D

शाण्डिल्यः । शाण्डिल्यखेलः ॥ * ॥ एतेषां गुणवचनत्वात्पचे परत्वार्थ वचनम् ॥ * ॥ इति कडारादिः ॥

एते शब्दा बहुव्रीहौ प्राप्तपूर्वनिपाताः सन्तो[१] वाहिताग्न्यादावित्यनेन पूर्वपदत्वभाजो वा भवन्ति ॥ आहितोऽग्निर्येन स आहिताग्निः । अग्न्याहितः । यथा च भट्टिकाव्ये ।

अग्न्याहितजनप्रष्ठे विजिगीषापराङ्मुखे ।
कस्माद्वा नीतितीक्ष्णस्य संरम्भस्तव तापसे[२] ॥

यथा वा । प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः[३] सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यैर्
हुतमयमुपलीढे साधु सांनाय्यमग्निः[४] ॥

गतोऽर्थो यस्यासौ गतार्थः । अर्थगतः ॥ * ॥ ऊढा भार्या येन । ऊढभार्यः । भार्योढः ॥ * ॥ पीतं घृतं येन । पीतघृतः । घृतपीतः ॥ * ॥ प्रियशब्दस्य केवलस्येहोपदेशादुत्तरपदमनियतम् । तेन प्रियगुडः । गुडप्रियः ॥ प्रियविश्वः । विश्वप्रियः ॥ प्रियदिः । दिप्रियः ॥ एतेन चाहिताग्न्यादयो गणाधीता एव ग्राह्या नाधिकप्रयोगाः[५] । तेनाहितवसुरित्यादौ यथाप्राप्तं स्यान्न विकल्पः ॥ ८० ॥

जाताहन्तः सपुत्रोऽथ तैलं मद्यं च पीततः ।
गड्वादेः सप्तमी क्तान्तं जातिकालसुखादितः ॥ ८१ ॥

---

१ सतो A D, संति C, cf P II 2, 37

२ Bhaṭṭ 9 111, °नीतीतिक्ष्णस्य° D, नीतिनिपुणस्य ed 1828, B C F om from भट्टिकाव्ये to यथा वा

३ Śiśup 4, 41, °विरचै A, विरिचै D

४ B C F om from कृतगुरु°

५ एतेन चाहि° B C, नाधिकप्रयोगा C

जित्याविपूयविनीया । विपूयविनीयजित्या ॥ देवापिशन्तनू । शन्तनु-देवापी इत्यादयोऽपि भवन्ति ॥ ८८ ॥ इति राजदन्तादि ॥

कडार' पिङ्गलो गौरो भिक्षुक खलतिस्तनु' ।
शौण्डः कुण्टो वृक खञ्जो बठरो गडुलस्तथा[१] ॥ ८९ ॥

कडारादय शब्दा कडारा कर्मधारये वेत्यनेन पूर्व वा निपतन्ति । कडारजैमिनि । जैमिनिकडार [२] ॥ * ॥ पिङ्गलमाण्ड्व्य । माण्ड्व्यपिङ्गल [३] ॥ * ॥ गौरगोतम । गोतमगौर [४] ॥ * ॥ भिक्षुकदाक्षि । दाक्षिभिक्षुक ॥ * ॥ खलतिखारपायण । खारपायणखलति ॥ * ॥ तनुद्रूणविन्दु । द्रूणविन्दुतनु । तनुशब्द कृशवाची[५] ॥ * ॥ शौण्डलिगु । लिगुशौण्ड [६] ॥ * ॥ कुण्टमाण्डि । माण्डिकुण्ट [७] ॥ * ॥ वृकशाण्डिल्य । शाण्डिल्यवृक ॥ * ॥ खञ्जवात्स्य । वात्स्यखञ्ज [८] ॥ * ॥ बठरच्छान्दस । छान्दसबठर [९] ॥ * ॥ गडुलगालव । गालवगडुल ॥ ८९ ॥

वृद्धखोडाविमौ काण' कूटखेलौ च कीर्तितौ ।
आहिताग्निगतार्थोढभार्यपीतघृतप्रिया ॥ ९० ॥

वृद्धमनु । मनुवृद्ध ॥ * ॥ खोडकहोड । कहोडखोड ॥ * ॥ काणद्रोण । द्रोणकाण ॥ * ॥ कूटदाक्षि । दाक्षिकूट ॥ * ॥ खेल-

---

१ खंडो घठरो° C घठरोदुलस्था A बंठरो° F
२ कडारजैमिनि । जैमिनिकडार (जैमनि क° A) \ B D
३ पिंगलमाढव्य । माढव्यपिंगल F
४ गौरगौतम । गौतमगौर D I
५ कृशाऽथवाची F
६ लिगुशाड D शौंडलिंगु । लिंगुशौंड F
७ कुंडमांडि । मांटिकुंट A
८ खंडवात्स । °खड । C
९ वठर' च्छांदस° \ वंठर° वठर F ; ववर° । °ववट । D

शाण्डिल्यः । शाण्डिल्यखेलः ॥ * ॥ एतेषां गुणवचनत्वात्पक्षे परत्वार्थं वचनम् ॥ * ॥ इति कडारादिः ॥

एते शब्दा यथायोगं प्राप्तपूर्वनिपाताः सन्तो[1] वाहिताग्न्यादाविन्यनेन पूर्वपदत्वभाजो वा भवन्ति ॥ आहितोऽग्निर्येन स आहिताग्निः । अग्न्याहितः । यथा च भट्टिकाव्ये ।

अग्न्याहितजनप्रख्ये विजिगीषापराङ्मुखे ।
कस्मादा नीतितोऽप्यस्य संरम्भस्तव तापसे[2] ॥

यथा वा । प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः[3] सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यैर्
हुतमयमुपलीढे साधु सांनाय्यमग्निः[4] ॥

गतोऽर्थो यस्यासौ गतार्थः । अर्थगतः ॥ * ॥ ऊढा भार्या येन । ऊढभार्यः । भार्योढः ॥ * ॥ पीतं घृतं येन । पीतघृतः । घृतपीतः ॥ * ॥ प्रियशब्दस्य केवलस्येहोपदेशादुत्तरपदमनियतम् । तेन प्रियगुडः । गुडप्रियः ॥ प्रियविश्वः । विश्वप्रियः ॥ प्रियदधिः । दधिप्रियः ॥ एतेन वाहिताग्न्यादयो गणाधीता एव वाच्या नाधिकप्रयोगाः[5] । तेनाहितवसुरित्यादौ यथाप्राप्तं स्यान्न विकल्पः ॥ ८० ॥

जातादन्तः सपुत्रोऽपि तैलं मद्यं च पीततः ।
शङ्खादेः सप्तमी क्वान्तं जातिकालसुखादितः ॥ ९१ ॥

---

१ सन्तो A D ; सति C ; cf P II 2, 37

२ Bh ott 9 111 ; °नीतीतिजस्य° D ; नीतिनिष्णस्य ed 1828 ; B C F om from भट्टिकाव्ये to यथा वा

३ Ś sup 4 41 ; °विरब्धैः A ; विरिब्धैः D

४ B C F om from कृतगुरु°

५ एतेन वाहि° B C ; नाधिकप्रयोगा C

तान्प्रभृतीत्यादीनामपि क्रियाविशेषणशब्दानां व्युत्पत्तिरनेनैव द्रष्टव्या ॥ ८५ ॥ इति तिष्ठद्ग्वादिः ॥

ऊरीभ्रंशकलोररीगुलुगुधाधूसीस्वधाविःसजूः[1]
धूलीध्वंसकलोररीमसमसाविक्लीफलीमसससाः।
ताली संशकला फलू च शकला[2] स्वाहा वषट्श्रौषटौ
वेताली च मशूपलीगुलुगुलातालीवितालीश्रुदः[3] ॥ ९६ ॥

ऊर्य्युरीत्यादिना[4] सूत्रेणोर्यादयः सुबन्ता भ्वादिना सह समस्यन्ते। स समासस्तत्पुरुषो भवति ॥ * ॥ ऊरीत्यङ्गीकारे विस्तारे च। ऊरीकृत्य। अङ्गीकृत्य विस्तारं कृत्वा वेत्यर्थः ॥ केचिद् अनुकरणविस्तारयोरिति पठन्ति। अपरे भृशार्थशब्दप्रशंसासु[5]। यथा।

तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते[6] ॥ * ॥

भ्रंशकलेति हिंसायाम्। भ्रंशकलाकृत्य। हिंसित्वेत्यर्थः ॥ * ॥ उररी। ऊरीवत् ॥ * ॥ गुलुगुधेति पीडायाम्। गुलुगुधाकृत्य[7]। पीडयित्वेत्यर्थः। क्रीडायामित्यन्ये ॥ गुलूगुधेत्यन्ये[8] ॥ * ॥ धूसीति विस्तारे। धूसीकृत्य। विस्तार्येत्यर्थः ॥ धूसी कान्ताविति शाकटायनः। अपरे धूसी काङ्क्षायाम्[9]। धूसीकृत्य। काङ्क्षां कृत्वेत्यर्थः ॥ * ॥ स्वधेति संप्रदाने। स्वधाकृत्य स्वधाशब्दोच्चारितमन्त्रादिकर्म[10] कृत्वा गत इत्यर्थः ॥

---

१ ऊरीभ्रंस॰ A ; ॰गुलगुधा॰ F.

२ साली संसकला A B C E F. ; ॰भ्रंसकला॰ D ; ॰सकला MSS

३ ॰आवालीवितालो॰ B C F, ॰आतालीविवाली॰ A ; ॰शद्. A D. E F.

४ ? ऊरूर्ती॰ A ; ऊरूर्त्यादिना D, ऊर्यादिना C

५ भृशार्त्तशब्द॰ B , भृशारशब्द॰ C , भृशार्थप्रशंसासु D

६ Śi॰ 2. 30 : वितायते A : विधीयते D , B has the whole stanza.

७ गुलगुधेति॰ गुलगुधाकृत्य। F.

८ ? Thus B , गुलुगुधेत्यन्य: A ; गुधुगुधेत्यन्ये C ; om D I

९ B C om. धुसी काङ्क्षायां.

१० स्वधादिशब्दो॰ A. ; ॰मान्त्यादि॰ C.

वषिप्रीत्योरित्यन्यः ॥ • ॥ एवं स्वाहावषट्श्रौषड्वौषटामर्थो द्रष्टव्यः। वषट् पूजायामित्यन्यः। एतेषां संप्रदानार्थत्वात्करोतिनैव संबन्धः ॥ • ॥ आविस्। इति प्राकाश्ये। यथा।

तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम्[1]।

आविष्करोति। प्रकटयतीत्यर्थः। आविःशब्दस्येह पाठानुकूल्ये[2] धातोः प्रागेव निपातः। एवं च योऽयं प्रयोगः[3]।

वारुणीमदविशङ्कमथाविश्चुम्बितोऽभवदमाविव रागः॥

इति। तथा। पृथुदर्विभृतस्ततः फणीन्द्रा
विषमाशीभिरनारतं वमन्तः।
अभवन् युगपद्विलोलजिह्वा-
युगलीढोभयसृक्कभागमाविः[4]॥

इति च प्रमादज एव नाम्न्यभ्युद्धारः[5]। आविरभवद्रागः। आविरभवन्फणीन्द्रा इति क्रियायोगस्य प्रतीयमानत्वात् ॥ • ॥ प्रजूरिति प्रहार्थे। प्रजूःकृत्य। प्रहितं प्राहित्येन वा कृत्वा गत इत्यर्थः। प्रहार्थत्वादयं कृभ्वस्तिभिर्युज्यते। आविःशब्दस्य[6] प्राकाश्यार्थत्वात् ॥ • ॥ धूम्रीति विदूरव्याकुलीभावे[7]। धूम्रीकृत्य। विदूराकुलतां[7] कृत्वेत्यर्थः ॥ • ॥ ध्वंसकला। ध्वंसकलावत् ॥ • ॥ उररी। ऊरीवत्[8] ॥ • ॥ ससससेति ध्वंसकलावत् ॥ • ॥ विक्री कम्री। इति विकारे। हिंसायामिति वामनः। विकारार्थत्वात् कृभ्वस्तिभिर्युज्यते। विक्रीकृत्य ॥ अपर आहुः विक्रीति विचारे। विक्रीकृत्य विचार्येत्यर्थः[9] ॥ कम्रीकृत्य ॥ • ॥ मसमसेति मसमसायते। अपरे तु मसमसा मसमसेति द्वौ संपूर्णे संवरणे

---

[1] Kum. 2. 2.
[2] शक्लत्वे B; शक्ले C.; सूचनेभ्यः B
[3] एवंविधो यं° D; h. sep. 10, 19
[4] h. 21, 42; A C D om. the first ha'f
[5] इति च प्रमाद° B; नाभ्युद्धारः C.
[6] आवि शब्दस्य B C F
[7] विदूर° A B विदूरर° C.
[8] उररीवत् B C D
[9] D om. from अपरे

याच्चिरित्यनेन[1] वा समस्यन्ते। स च तत्पुरुषसंज्ञो भवति। साचात्कृत्य। साचात् कृत्वा। असाचाद्भूतं साचात् कृत्वेत्यर्थः ॥ * ॥ बीजरुहेति रुहिक्रियार्थः। बीजरुहाकरोति सेवकः ॥ शोभायामित्यन्ये ॥ * ॥ नमस्कृत्य ॥ * ॥ प्रसहने। इत्युत्साहे सामर्थ्ये[2] च। प्रसहनेकृत्य ॥ * ॥ चिन्ता। इति मानसे व्यापारे। चिन्ताकृत्य ॥ चित्तेति कश्चित्। स चाचित्ता चित्ता कृत्वा। चित्ताकृत्य[3]। अव्ययत्वादसमासेऽपि विभक्त्यश्रवणमव्ययत्वं च स्वरादेराकृतिगणत्वादित्याह। एवमन्येष्वपि ॥ * ॥ आविष्कृत्य ॥ * ॥ रोचना। इति[4] अङ्कोत्पादने प्रशंसायां च। रोचनाकृत्य ॥ लोचनेति दीप्तौ कश्चिदाह ॥ * ॥ बीजर्या। इति जरणक्रियार्थः। बीजर्याकृत्य धनस्य[5] गतः ॥ शोभार्थ इत्यन्ये ॥ * ॥ लवणमिति रुच्यर्थे। लवणंकृत्य ॥ * ॥ सह। इति संबद्धार्थः। सहकृत्य ॥ * ॥ प्रतपने। इति तापार्थः। मिथ्याकृतं प्रतपनेकृत्य चितीशः[6] ॥ वितपन इत्यपि वामनः[7] ॥ * ॥ भद्रा इत्यालोचनाप्रशंसामङ्गलेषु। अभद्राभद्राकरणं पूर्वम्। भद्राकृत्य ॥ केचिद् अभद्रां भद्रां कृत्वेति विग्रहे विभक्तिमुच्चारयन्ति ॥ * ॥ अर्थेकृत्य श्लोकं पठति। सार्थकं कृत्वेत्यर्थः। यद्वा। अर्थेकृत्य वदति। सप्रयोजनं कृत्वा वदतीत्यर्थः। यथा क्लिन्नपस्य[8]।

साचात्कृतेऽथ लवणंकृति दिङ्मुखानाम्[9]
उष्णंकृतोऽर्थिपि वशेकृदमाकृदास्ते[10]।

---

१ °साचादाद्योश्चिरित्य° A, साचादाद्यो चिरित्य° B, साचादाद्योरित्य° E F, साचादाद्योः चिरित्य° D, cf P 1 4, 74 V

२ सामर्थे A, साहित्यादर्थे D

३ स चाचित्ता कृत्वा चित्य। A, स वा चित्ता कृत्वा° C, चित्ता कृत्वा चित्ताकृत्य D

४ रोचते तु A

५ वनस्य A, वतस्य D

६ मिथ्याकृता° A D, मिथ्याकृत° B F, मिथ्याकृतप्र° C, °कृदर्थ corr D.

७ इति वामन D

८ क्लिलपस्य B, cf p ८०, note ६

९ साचात्कृत्याथ° D

१० उष्णकृतोर्थ्यपयि वतीकृद° D, °विपिविशेकृद्मा° F

आस्थाकृताः कृतनमस्कृतयोऽर्थमर्घ्य-[1]
कृत्य सती च नृपती च नृपस्य जग्मुः ॥

अग्नीकृत्य । अग्नौ कृत्वा ।

अग्नीकृतामथ कृतैरुदकंकृदंगात्
आर्द्रीकृते विहसनेकृति पद्मिनीनाम्[2] ॥

अग्नाविति नैष्ण्ये शाकटायनः ॥ ० ॥ अमा । इति रहःसमवायसंयोगसामर्थ्येषु । अमाकृत्य ॥ ० ॥ अच्छाकृत्य । यथा ।

शीतंकृदर्चिषि तटीमपराम्बुधेः सं-
मर्याचिकीर्षति रवावुदयाद्रिशृङ्गम्[3] ।
प्रादुष्कृता मिलितकोकयुगे मुहूर्तम्
अच्छाकृतेव वियता सरसि स्वलक्ष्मीम्[4] ॥

प्राजरुहा । इति वृद्धिक्रियार्थः । प्राजरुहाकृत्य पर्जन्यो निवृत्तः[5] ॥ शोभार्थं इत्यन्ये ॥ ० ॥ उदकंकृत्य ॥ ० ॥ विसहने । प्रसहनेवत् ॥ ० ॥ मिथ्याकृत्य[6] ॥ ० ॥ आर्द्रीकृत्य ॥ आर्द्रे । इत्येकारान्तमपि कश्चित् । आर्द्रेकृत्य ॥ ० ॥ आस्था । इत्यादरे प्रतिज्ञायां च । आस्थाकृत्य ॥ ० ॥ प्राजर्या । इति बीजार्थावत्[7] ॥ प्राजुरा । इत्यपि शाकटायनः[8] ॥ ० ॥ पिन्नाकृताग्नितहितोरिविकम्पमेतत् ॥ शाकटायनस्तु विकपने[9] प्रकपने

---

१ आस्थाकृता कृत॰ A ; आस्थि कृताः कृत॰ D

२ उदधिकृदंमापार्द्रकृते A ; उदकंकृदंदार्द्रकृते॰ C ; ॰कृदंमापार्द्रकृते विहसने॰ D , ॰र्द्रकृते वि॰ B ; कृदंमार्द्रकृते॰ E.

३ तटीमपराम्बुधि॰ समर्या विकर्षति॰ C.

४ मुहूर्तमच्छाकृतेव॰ C , मुहूर्तमच्छाकृतेव॰ A ; ॰कोकयुगेमुहूर्तमच्छाकृतेव वियता सरति स्व॰ F

५ पर्जन्यो॰ B ; पर्यान्या॰ C ; ॰कृत्य निवृत्त D

६ उदकंकृत्वा वसाद्भेयुव मिथ्याकृत्य D

७ आर्द्रेति॰ C

८ प्राजरा॰ C ; D om. इति

९ ॰ विकपने A. C. E ; C. F, om. प्रकपने

वैरूप्ये । विकपने हिंसायाम् । प्रकपने[1] संताप इत्यन्ये । इत्याह ॥ * ॥ विहसनेकृत्य ॥ * ॥ शीतंकृत्य ॥ शीतमनादर इति शाकटायनः ॥ * ॥ वश । इत्यस्रातच्चे । वशेकृत्य ॥ * ॥ प्रादुष्कृत्य ॥ * ॥

विकम्पनेप्रभृतीनामेजन्तत्वं[2] लवणंप्रभृतीनां मान्तत्वं च गणपाठसामर्थ्यादेव । अथवा । एते सप्तमीप्रतिरूपका द्वितीयाप्रतिरूपकाश्च निपाताः ॥ चादित्वाभावे । आस्थां कृत्वा । अग्नौ कृत्वा जलं तापयतीत्यादि स्यात् ॥ आकृतिगणोऽयम् । तेन पर्यटनंकृत्तिसंसर्याप्रभृतयो द्रष्टव्याः ॥ ९८ ॥ इति माचादादिः ॥

स्युर्याजकोद्वर्तककर्तृकारकाः
प्रयोजकोत्सादकभर्तृवर्तकाः ।
अध्यापकस्नापकगोप्तृपूजकास्
तुर्यैः परेस्थारकवेषकाविमौ[3] ॥ ९९ ॥

याजकादिभिः शब्दैः सुबन्तं पदम् अकयाजकादिभिरित्यनेन समस्यते । स समासस्तत्पुरुषसंज्ञो भवति ॥ * ॥ ब्राह्मणानां याजकः । ब्राह्मणयाजकः । याजयिता ॥ * ॥ शरीरस्योद्वर्तकः । शरीरोद्वर्तकः ॥ * ॥ प्रणम्य सर्वकर्तारम्[4] ॥ * ॥ धर्मस्य कारकः । धर्मकारकः ॥ * ॥ तत्प्रयोजककर्तृत्वमुपैति मम जल्पतः[5] ॥ * ॥ रिपूणामुत्सादकः । रिपूत्सादकः ॥ छद अपवारण उत्पूर्वः । क्षत्रियस्योच्छादकः । क्षत्रियोच्छादक इति शाकटायनः ॥ * ॥ भुवो भर्ता । भूभर्ता ॥ * ॥ वर्तयतीति वर्तकः । भाष्यस्य वर्तकः । भाष्यवर्तकः ॥ * ॥ पुत्राणामध्यापकः । पुत्रा-

---

१ विकपने हिसायां प्रकपने I'
२ विकपनेप्र° A. B C
३ D corr गोपपूज°, परीवारकवे यकावसौ C
४ Beginning of Trilochanadâsa's Kâtantravṛttipañjikâ, cf. Kât ॥ 466
५ Sraup 2, 71

ध्यापकः ॥ * ॥ खापयतीति खापकः । राज्ञः खापकः । राजखापकः ॥ * ॥ धात्र्या गोपकः । धात्रीगोपकः ॥ * ॥ साधूनां पूजकः । साधुपूजकः ॥ * ॥ ब्राह्मणानां तुर्यः । ब्राह्मणतुर्यः ॥ * ॥ परिचरतीति परिचारकः । गुरोः परिचारकः । गुरुपरिचारकः ॥ * ॥ परिवेवेष्टि । परिवेषकः । राज्ञः परिवेषकः । राजपरिवेषकः ॥ यद्वा । घृतस्य परिवेषकः । घृतपरिवेषकः ॥ ९९ ॥

गणको रथपत्तिभ्यां चतुर्थोन्मादकौ तथा ।
होता द्वि चि च तीयान्तं तुरीयोऽपि[1] सतां मतः ॥ १०० ॥

रथानां गणकः । रथगणकः ॥ पत्तीनां गणकः । पत्तिगणकः ॥ * ॥ आत्मनश्चतुर्थः । आत्मचतुर्थः ॥ * ॥ चित्तस्योन्मादकः । चित्तोन्मादकः ॥ * ॥ चौरस्य होता । चौरहोता ॥ * ॥ राज्ञां द्वितीयः । राजद्वितीयः ॥ राज्ञां तृतीयः । राजतृतीयः ॥ राज्ञां तुरीयः । राजतुरीयः । तुरीयोऽपि सतां मत इति साभिप्रायम् । तेन द्वितीयतृतीयेत्यादि[2] सूत्रं इहत्तत्वे व्यर्थम् । गणसमाश्रयणमेव श्रेयः ।

क्रियानुगतिमास्थाय लोके ख्यातिमुपागताः ।
ये कान्ताः पावकाद्यास्ते द्रष्टव्या याजकादिषु ॥

तेन गोमयानां पावकः । गोमयपावकः ॥ गृहस्य दीपकः । गृहदीपकः ॥ पिष्टस्य मोदकः । पिष्टमोदक इत्यादि ॥ न कर्तरीति प्रतिषेधे[3] प्राप्ते पाठः ॥ १०० ॥ इति याजकादिः ॥

शौण्डव्याडौ निपुणचपलौ पण्डितान्तःप्रवीणाः[4]
स्यात् संवीतः कुशलकितवाधीनधूर्तप्रधानम् ।

१ चतुर्थोऽपि F
२ Pân II 2, 3
३ निषेधे C. D.
४ पंडितांतप्रवीणाः F, °प्रवीणः C.

सव्यध्यानप्रवणविदिताः१ सारगुर्वायसाः स्युः२
सिद्धो बन्धः कटकविरसौ शेखरः शुष्कमक्षौ३ ॥ १०१ ॥

सप्तम्यन्तं शौण्डादिभिः सह सप्तमी शौण्डैरित्यनेन वा समस्यते। स समासस्तत्पुरुषसंज्ञो भवति ॥ अक्षेषु प्रसक्तः४ शौण्डः। अक्षशौण्डः॥ वृत्तौ प्रसक्तक्रियाया४ अन्तर्भावः शौण्डः प्रवीणः। यथा पण्डितश्रीसागरचन्द्रस्य५।

द्रव्याश्रयाः श्रीजयसिंहदेव६ गुणाः कणादेन महर्षिणोक्ताः।
त्वया पुनः पण्डितदानशौण्ड गुणाश्रयं द्रव्यमपि व्यधायि७ ॥
यद्यपि शौण्डशब्दो मद्यपे रूढस्तथापि लक्षणया प्रवीणोऽपि भण्यते। दुर्व्यसनी वा ॥

पानशौण्डः श्रियं नेता नात्यन्तीमलमुन्मनाः८ ॥

इति मुख्यार्थोऽपि९ समासभाक् ॥ * ॥ अस्त्रव्याडः ॥ * ॥ आचारनिपुणः ॥ * ॥ वाक्चपलः ॥ * ॥ रणपण्डितः ॥ * ॥ ते नालिकेरान्तरपः पिबन्तः१०। न चैतत् षष्ठीसमासेन सिध्यतीति शक्यं प्रतिपत्तुमर्थभेदात्। न ह्यर्णवेऽन्तर् अर्णवस्यान्तरिति चैकोऽर्थः। किं चाव्ययत्वात्षष्ठीसमासप्रतिषेधः ॥ श्रीभोजस्त्वन्तरशब्दं पपाठ ॥ * ॥ शास्त्रप्रवीणः। शाकटायनस्तु। अर्थप्रवीणः११। अर्थविषये निपुण इत्याह ॥ * ॥ लोक-

---

१ भव्यध्यान° E, भव्याधान° F, मध्यध्यान° C, सुध्यध्यान° D, °प्रणवविदिता. (!) MSS
२ गुर्वायसाश्च E, °यशास्त्र। D
३ शुष्कपची B
४ प्रशक्त° A D
५ Thus B F, पडित। सागरच द्रस्य A, पडितस्य सागर° C, पडित रामचंद्रस्य (corr from °सामचद्रस्य) D
६ श्रीयुतसिंहदेव F
७ °शौंडो गुणाश्रयद्रव्यमसि व्यधायि D and om the first half sloka
८ Bhattik 5, 10, °शौंडश्रिय° MSS, ? नात्यतीना त्वसु° A B D F, वेंतात्यतीना त्वसु° C
९ मुख्योपि A
१० Sisup 3,81, [नारिकेला° eds]
११ ? अर्थसवीण. A B

